॥ श्रीसूर्याष्टोत्तरशतनामस्तोत्रम् ॥

सूर्य बीज मन्त्र - ॐ ह्राँ ह्रीं ह्रौं सः सूर्याय नमः ॥

अरुणाय शरण्याय करुणारससिन्धवे ।
असमानबलायाऽर्तरक्षकाय नमो नमः ॥ १॥

आदित्यायाऽदिभूताय अखिलागमवेदिने ।
अच्युतायाऽखिलज्ञाय अनन्ताय नमो नमः ॥ २॥

इनाय विश्वरूपाय इज्यायैन्द्राय भानवे ।
इन्दिरामन्दिराप्ताय वन्दनीयाय ते नमः ॥ ३॥

ईशाय सुप्रसन्नाय सुशीलाय सुवर्चसे ।
वसुप्रदाय वसवे वासुदेवाय ते नमः ॥ ४॥

उज्ज्वलायोग्ररूपाय ऊर्ध्वगाय विवस्वते ।
उद्यत्किरणजालाय हृषीकेशाय ते नमः ॥ ५॥

ऊर्जस्वलाय वीराय निर्जराय जयाय च ।
ऊरुद्वयाभावरूपयुक्तसारथये नमः ॥ ६॥

ऋषिवन्द्याय रुग्घन्त्रे ऋक्षचक्रचराय च ।
ऋजुस्वभावचित्ताय नित्यस्तुत्याय ते नमः ॥ ७॥

ॠकारमातृकावर्णरूपायोज्ज्वलतेजसे ।
ॠक्षाधिनाथमित्राय पुष्कराक्षाय ते नमः ॥ ८॥

लुप्तदन्ताय शान्ताय कान्तिदाय घनाय च ।
कनत्कनकभूषाय खद्योताय ते नमः ॥ ९॥

लूनिताखिलदैत्याय सत्यानन्दस्वरूपिणे ।
अपवर्गप्रदायाऽर्तशरण्याय नमो नमः ॥ १०॥

एकाकिने भगवते सृष्टिस्थित्यन्तकारिणे ।
गुणात्मने घृणिभृते बृहते ब्रह्मणे नमः ॥ ११॥

ऐश्वर्यदाय शर्वाय हरिदश्वाय शौरये ।

दशदिक्सम्प्रकाशाय भक्तवश्याय ते नमः ॥ १२॥

ओजस्कराय जयिने जगदानन्दहेतवे ।
जन्ममृत्युजराव्याधिवर्जिताय नमो नमः ॥ १३॥

ओउन्नत्यपदसञ्चाररथस्थायात्मरूपिने ।
कमनीयकरायाऽब्जवल्लभाय नमो नमः ॥ १४॥

अन्तर्बहिःप्रकाशाय अचिन्त्यायाऽत्मरूपिणे ।
अच्युताय सुरेषाय परस्मैज्योतिषे नमः ॥ १५॥

अहस्कराय रवये हरये परमात्मने ।
तरुणाय वरेण्याय ग्रहाणाम्पतये नमः ॥ १६॥

ॐ नमो भास्करायाऽदिमध्यान्तरहिताय च ।
सौख्यप्रदाय सकलजगताम्पतये नमः ॥ १७॥

नमः सूर्याय कवये नमो नारायणाय च ।
नमो नमः परेशाय तेजोरूपाय ते नमः ॥ १८॥

ॐ श्रीं हिरण्यगर्भाय ॐ ह्रीं सम्पत्कराय च ।
ॐ ऐं इष्टार्थदायाऽनुप्रसन्नाय नमो नमः ॥ १९॥

श्रीमते श्रेयसे भक्तकोटिसौख्यप्रदायिने ।
निखिलागमवेद्याय नित्यानन्दाय ते नमः ॥ २०॥

यो मानवः सन्ततमर्कमर्चयन्पठेत्प्रभाते विमलेन चेतसा ।
इमान् नामानि च तस्य पुण्यमायुर्धनं धान्यमुपैति नित्यम् ॥२१॥

इमं स्तवं देववरस्य कीर्तयेच्छृणोति योऽयं सुमनाः समाहितः ।
स मुच्यते शोकदवाग्निसागराल्लभेत सर्वं मनसो यथेप्सितम् ॥

इति श्रीमदथर्वणरहस्ये सूर्याष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ।

॥ श्रीसूर्याष्टोत्तरशतनामस्तोत्रम् ॥

श्रीगणेशाय नमः ।
वैशम्पायन उवाच ।
शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः ।
क्षणं च कुरु राजेन्द्र गुह्यं वक्ष्यामि ते हितम् ॥ १॥

धौम्येन तु यथा प्रोक्तं पार्थाय सुमहात्मने ।
नाम्नामष्टोत्तरं पुण्यं शतं तच्छृणु भूपते ॥ २॥

सूर्योऽर्यमा भगस्त्वष्टा पूषार्कः सविता रविः ।
गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥ ३॥

पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् ।
सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ॥ ४॥

इन्द्रो विवस्वान्दीप्तांशुः शुचिः शौरिः शनैश्चरः ।
ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ॥ ५॥

वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः ।
धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः ॥ ६॥

कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः ।
कला काष्ठा मुहुर्ताश्च पक्षा मासा ऋतुस्तथा ॥ ७॥

संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः ।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥ ८॥

लोकाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः । कालाध्यक्षः
वरुणः सागरोंऽशुश्च जीमूतो जीवनोऽरिहा ॥ ९॥

भूताश्रयो भूतपतिः सर्वलोकनमस्कृतः ।
स्रष्टा संवर्तको वह्निः सर्वस्यादिरलोलुपः ॥ १०॥

अनन्तः कपिलो भानुः कामदः सर्वतोमुखः ।
जयो विशालो वरदः सर्वधातुनिषेचिता ॥ ११॥  सर्वभूतनिषेवितः
मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारणः ॥

धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः ॥ १२॥

द्वादशात्मारविन्दाक्षः पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ १३॥

देहकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषान्वितः ॥ १४॥

एतद्वै कीर्तनीयस्य सूर्यस्यैव महात्मनः । सूर्यस्यामिततेजसः
नाम्नामष्टशतं पुण्यं शक्रेणोक्तं महात्मना ॥ १५॥ प्रोक्तमेतत्स्व्यम्भुवा
शक्राच्च नारदः प्राप्तो धौम्यश्च तदनन्तरम् ।
धौम्याद्युधिष्ठिरः प्राप्य सर्वान्कामानवाप्तवान् ॥ १६॥

सुरपितृगणयक्षसेवितं ह्यसुरनिशाचरसिद्धवन्दितम् ।
वरकनकहुताशनप्रभं त्वमपि मनस्यभिधेहि भास्करम् ॥ १७॥

सूर्योदये यस्तु समाहितः पठेत्स पुत्रलाभं धनरत्नसञ्चयान् ।
लभेत जातिस्मरतां सदा नरः स्मृतिं च मेधां च स विन्दते पराम् ॥ १८॥

इमं स्तवं देववरस्य यो नरः प्रकीर्तयेच्छुचिसुमनाः समाहितः ।
विमुच्यते शोकदवाग्निसागराल्लभेत कामान्मनसा यथेप्सितान् ॥ १९॥

॥ इति श्रीमहाभारते युधिष्ठिरधौम्यसंवादे
आरण्यकपर्वणि श्रीसूर्याष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

॥ नरसिंहपुराणे सूर्याष्टोत्तरशतनामस्तोत्रं विश्वकर्मकृत ॥

भरद्वाज उवाच --
यैः स्तुतो नामभिस्तेन सविता विश्वकर्मणा ।
तान्यहं श्रोतुमिच्छामि वद सूत विवस्वतः ॥ १॥

सूत उवाच --
तानि मे शृणु नामानि यैः स्तुतो विश्वकर्मणा ।
सविता तानि वक्ष्यामि सर्वपापहराणि ते ॥ २॥

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
तिमिरोन्मथनः शम्भुस्त्वष्टा मार्तण्ड आशुगः ॥ ३॥

हिरण्यगर्भः कपिलस्तपनो भास्करो रविः ।
अग्निगर्भोऽदितेः पुत्रः शम्भुस्तिमिरनाशनः ॥ ४॥

अंशुमानंशुमाली च तमोघ्नस्तेजसां निधिः ।
आतपी मण्डली मृत्युः कपिलः सर्वतापनः ॥ ५॥

हरिर्विश्वो महातेजाः सर्वरत्नप्रभाकरः ।
अंशुमाली तिमिरहा ऋग्यजुस्सामभावितः ॥ ६॥

प्राणाविष्करणो मित्रः सुप्रदीपो मनोजवः ।
यज्ञेशो गोपतिः श्रीमान् भूतज्ञः क्लेशनाशनः ॥ ७॥

अमित्रहा शिवो हंसो नायकः प्रियदर्शनः ।
शुद्धो विरोचनः केशी सहस्रांशुः प्रतर्दनः ॥ ८॥

धर्मरश्मिः पतंगश्च विशालो विश्वसंस्तुतः ।
दुर्विज्ञेयगतिः शूरस्तेजोराशिर्महायशाः ॥ ९॥

भ्राजिष्णुर्ज्योतिषामीशो विजिष्णुर्विश्वभावनः ।
प्रभविष्णुः प्रकाशात्मा ज्ञानराशिः प्रभाकरः ॥ १०॥

आदित्यो विश्वदृग् यज्ञकर्ता नेता यशस्करः ।
विमलो वीर्यवानीशो योगज्ञो योगभावनः ॥ ११॥

अमृतात्मा शिवो नित्यो वरेण्यो वरदः प्रभुः ।

धनदः प्राणदः श्रेष्ठः कामदः कामरूपधृक् ॥ १२॥

तरणिः शाश्वतः शास्ता शास्त्रज्ञस्तपनः शयः ।
वेदगर्भो विभुर्वीरः शान्तः सावित्रिवल्लभः ॥ १३॥

ध्येयो विश्वेश्वरो भर्ता लोकनाथो महेश्वरः ।
महेन्द्रो वरुणो धाता विष्णुरग्निर्दिवाकरः ॥ १४॥

एतैस्तु नामभिः सूर्यः स्तुतस्तेन महात्मना ।
उवाच विश्वकर्माणं प्रसन्नो भगवान् रविः ॥ १५॥

भ्रमिमारोप्य मामत्र मण्डलं मम शातय ।
त्वत्बुद्धिस्थं मया ज्ञातमेवमौष्ण्यं शमं व्रजेत् ॥ १६॥

इत्युक्तो विश्वकर्मा च तथा स कृतवान् द्विज ।
शान्तोष्णः सविता तस्य दुहितुर्विश्वकर्मणः ॥ १७॥

संज्ञायाश्चाभवद्विप्र भानुस्त्वष्टारमब्रवीत् ।
त्वया यस्मात् स्तुतोऽहं वै नाम्नामष्टशतेन च ॥ १८॥

वरं वृणीष्व तस्मात् त्वं वरदोऽहं तवानघ ।
इत्युक्तो भानुना सोऽथ विश्वकर्माब्रवीदिदम् ॥ १९॥

वरदो यदि मे देव वरमेतं प्रयच्छ मे ।
एतैस्तु नामभिर्यस्त्वां नरः स्तोष्यति नित्यशः ॥ २०॥

तस्य पापक्षयं देव कुरु भक्तस्य भास्कर ॥ २१॥

तेनैवमुक्तो दिनकृत् तथेति
त्वष्टारमुक्त्वा विरराम भास्करः ।
संज्ञां विशङ्कां रविमण्डलस्थितां
कृत्वा जगामाथ रविं प्रसाद्य ॥ २२॥

इति श्रीनरसिंहपुराणे एकोनविंशोऽध्यायः ॥ १९॥